तत्र बुद्धेस्त्रैविध्यमाह—

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥

प्रवृत्तिं चेति त्रिभिः । प्रवृत्तिं च धर्मे, निवृत्तिं चाधर्मे । यस्मिन् देशे काले च यत्कार्यमकार्यं च भयाभये कार्याकार्यनिमित्तावर्थानर्थौ कथं बन्धः कथं वा मोक्ष इति या बुद्धिरन्तःकरणं वेत्ति सा सात्त्विकी । यया पुमान् वेत्तीति वक्तव्ये करणे कर्तृत्वोपचारः काष्ठानि पचन्तीतिवत् ॥ ३० ॥

राजसीं बुद्धिमाह—

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

ययेति । अयथावत्सन्देहास्पदत्वेनेत्यर्थः । स्पष्टमन्यत् ॥ ३१ ॥

तामसीं बुद्धिमाह—

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥

अधर्ममिति । विपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः । बुद्धिरन्तःकरणं पूर्वोक्तम् । ज्ञानं तु तद्वृत्तिः, धृतिरपि तद्वृत्तिरेव । यद्वा अन्तःकरणस्य धर्मिणो बुद्धिरप्यध्यवसायलक्षणा वृत्तिरेव । इच्छाद्वेषादीनां तद्वृत्तीनां बहुत्वेऽपि धर्माधर्मो- भयाभयसाधनत्वेन प्राधान्यादेतासां त्रैविध्यमुक्तम् । उपलक्षणं चैतदन्यासाम् ॥३२॥

इदानीं धृतेस्त्रैविध्यमाह—

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

धृत्येति त्रिभिः । योगेन चित्तैकाग्र्येण हेतुनाऽव्यभिचारिण्या विषयान्तरम- धारयन्त्या यया धृत्या मनसः प्राणस्येन्द्रियाणां च क्रिया धारयते नियच्छति सा धृतिः सात्त्विकी ॥ ३३ ॥

राजसीं धृतिमाह—

यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥

ययेति । यया तु धृत्या धर्मार्थकामान्प्राधान्येन धारयते न विमुञ्चति तत्प्रसङ्गेन फलाकाङ्क्षी च भवति सा राजसी धृतिः ॥ ३४ ॥

तामसीं धृतिमाह—

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥

ययेति । दुष्टा अविवेकबहुला मेधा यस्य स दुर्मेधाः पुरुषः यया धृत्या स्वप्नादीन्न विमुञ्चति पुनःपुनरावर्तयति, स्वप्नोऽत्र निद्रा, सा धृतिस्तामसी ॥ ३५ ॥

सुखस्य त्रैविध्यं प्रतिजानीते अर्धेन—

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥

सुखमिति । स्पष्टार्थः । तत्र सात्त्विकं सुखमाह—अभ्यासादिति सार्धेन । यत्र यस्मिन्सुखे अभ्यासादतिपरिचयाद्रमते नतु विषयसुख इव सहसा रतिं प्राप्नोति । यस्मिन् रममाणश्च दुःखस्यान्तमवसानं नितरां गच्छति प्राप्नोति ॥ ३६ ॥

कीदृशं तत्—

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥

यत्तदिति । यत्तत्किमपि अग्रे प्रथमं विषमिव मनःसंयमाधीनत्वाद्दुःखावहमिव भवति । परिणामे त्वमृतसदृशम् । आत्मविषया बुद्धिरात्मबुद्धिस्तस्याः प्रसादेन रजस्तमोमलत्यागेन स्वच्छतयावस्थानं ततो जातं यत्सुखं तत्सात्त्विकं प्रोक्तं योगिभिः ॥ ३७ ॥

राजसं सुखमाह—

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

विषयेन्द्रियेति। विषयाणामिन्द्रियाणां च संयोगाद्यत्तत्प्रसिद्धं स्त्रीसङ्गादि सुखममृतमुपमा यस्य तादृशं भवत्यग्रे प्रथमं परिणामे तु विषतुल्यमिहामुत्र च दुःखहेतुत्वात्तत्सुखं राजसं स्मृतम्॥ ३८॥

तामसं सुखमाह—

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम्॥ ३९॥

यदिति। अग्रे प्रथमक्षणेऽनुबन्धे च पश्चादपि यत्सुखमात्मनो मोहकरम्, तदेवाह—निद्रा चालस्यं च प्रमादश्च कर्तव्यार्थावधानराहित्येन मनोराज्यमेतेभ्य उत्तिष्ठति यत्सुखं तत्तामसमुदाहृतम्॥ ३९॥

अनुक्तमपि संगृह्णन्प्रकरणार्थमुपसंहरति—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः॥ ४०॥

न तदस्तीति। एभिः प्रकृतिसम्भवैः सत्त्वादिभिस्त्रिभिर्गुणैर्मुक्तं हीनं सत्त्वं प्राणिजातमन्यद्वा यत्स्यात्तत्पृथिव्यां मनुष्यलोकादिषु दिवि देवेषु च क्वापि नास्तीत्यर्थः॥ ४०॥

ननु च यद्येवं सर्वमपि क्रियाकारकफलादिकं प्राणिजातं च त्रिगुणात्मकमेव कथं तर्ह्यस्य मोक्ष इत्यपेक्षायां स्वस्वाधिकारविहितैः कर्मभिः परमेश्वराराधनात्तत्प्रसादलब्धज्ञानेनेत्येवं सर्वगीतार्थसारं सङ्गृह्य प्रदर्शयितुं प्रकरणान्तरमारभते—

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥ ४१॥

ब्राह्मणेत्यादि। यावदध्यायसमाप्ति। हे परन्तप शत्रुतापन ब्राह्मणानां क्षत्रियाणां विशां च शूद्राणां च कर्माणि प्रविभक्तानि प्रकर्षेण विभागतो विहितानि। शूद्राणां स्वभावात्पृथक्करणं द्विजत्वाभावेन वैलक्षण्यात्। विभागोपलक्षणमाह—स्वभावः सात्त्विकादिः प्रभवति प्रादुर्भवति येभ्यस्तैर्गुणैरुपलक्षणभूतैः। यद्वा स्वभावः पूर्वजन्मसंस्कारस्तस्मात्प्रादुर्भूतैरित्यर्थः। तत्र सत्त्वप्रधाना ब्राह्मणाः। सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियाः। तमउपसर्जनरजःप्रधाना वैश्याः। रजउपसर्जनतमःप्रधानाः शूद्राः॥ ४१॥

तत्र ब्राह्मणस्य स्वाभाविकानि कर्माण्याह—

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥**

शम इति । शमश्चित्तोपरमः । दमो बाह्येन्द्रियोपरमः । तपः पूर्वोक्तं शारीरादि । शौचं बाह्याभ्यन्तरम्, क्षान्तिः क्षमा, आर्जवमवक्रता, ज्ञानं शास्त्रीयम्, विज्ञानमनुभवः, आस्तिक्यमस्तिपरलोक इति निश्चयः । एतच्छमादि ब्राह्मणस्य स्वभावाज्जातं कर्म ॥ ४२ ॥

क्षत्रियस्य स्वाभाविकानि कर्माण्याह—

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥**

शौर्यमिति । शौर्यं पराक्रमः । तेजः प्रागल्भ्यम् । धृतिर्धैर्यम् । दाक्ष्यं कौशलम् । युद्धे चाप्यपलायनमपराङ्मुखता । दानमौदार्यम् । ईश्वरभावो नियमनशक्तिः । एतत्क्षत्रियस्य स्वभावजं कर्म ॥ ४३ ॥

वैश्यशूद्रयोः कर्माह—

**कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥**

कृषीति । कृषिः कर्षणम्, गाः रक्षतीति गोरक्षस्तस्य भावो गौरक्ष्यं पाशुपाल्यमित्यर्थः । वाणिज्यं क्रयविक्रयादि । एतद्वैश्यस्य स्वभावजं कर्म । त्रैवर्णिकपरिचर्यात्मकं शूद्रस्यापि स्वभावजं कर्म ॥ ४४ ॥

एवम्भूतस्य ब्राह्मणादिकर्मणो ज्ञानहेतुत्वमाह—

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥**

स्वे स्व इति । स्वस्वाधिकारविहिते कर्मण्यभिरतः परिनिष्ठितो नरः संसिद्धिं ज्ञानयोग्यतां लभते । कर्मणां ज्ञानप्राप्तिप्रकारमाह—स्वकर्मेति सार्धेन । स्वकर्मपरिनिष्ठितो यथा येन प्रकारेण तत्त्वज्ञानं लभते तं प्रकारं शृणु ॥ ४५ ॥

तमेवाह—

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ ४६॥

यत इति। यतोऽन्तर्यामिणः परमेश्वराद्भूतानां प्राणिनां प्रवृत्तिश्चेष्टा भवति। येन च कारणात्मना सर्वमिदं विश्वं ततं व्याप्तं तमीश्वरं स्वकर्मणाऽभ्यर्च्य पूजयित्वा सिद्धिं लभते मनुष्यः॥ ४६॥

स्वकर्मणेति विशेषणस्य फलमाह—

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्॥ ४७॥

श्रेयानिति। विगुणोऽपि स्वधर्मः सम्यगनुष्ठितादपि परधर्माच्छ्रेयाञ्श्रेष्ठः। च बन्धुवधादियुक्ताद्युद्धादेः स्वधर्माद्भिक्षाटनादिपरधर्मः श्रेष्ठ इति मन्तव्यम्। यतः स्वभावेन पूर्वोक्तेन नियतं नियमेनोक्तं कर्म कुर्वन्किल्बिषं नाप्नोति॥ ४७॥

यदि पुनः साङ्ख्यदृष्ट्या स्वधर्मं हिंसालक्षणं दोषं मत्वा परधर्मं श्रेष्ठं मन्यसे तर्हि सदोषत्वं परधर्मेऽपि तुल्यमित्याशयेनाह—

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥ ४८॥

सहजमिति। सहजं स्वभावविहितं कर्म सदोषमपि न त्यजेत्। हि यस्मात् सर्वेऽप्यारम्भा दृष्टादृष्टार्थानि सर्वाण्यपि कर्माणि दोषेण केनचिदावृताः व्याप्ता एव। यथा सहजेन धूमेनाग्निरावृतस्तद्वत्। अतो यथाग्नेर्धूमरूपं दोषमपाकृत्य प्रताप एव तमःशीतादिनिवृत्तये सेव्यते तथा कर्मणोऽपि दोषांशं विहाय गुणांश एव सत्त्वशुद्धये सेव्यत इत्यर्थः॥ ४८॥

ननु कथं कर्मणि क्रियमाणे दोषांशप्रहाणेन गुणांश एव संपत्स्यत इत्यपेक्षायामाह—

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति॥ ४९॥

असक्तेति। असक्ता सङ्गशून्या बुद्धिर्यस्य, जितात्मा निरहङ्कारः, विगतस्पृहो विगता स्पृहा फलविषयेच्छा यस्मात्स एवम्भूतेन स त्यागः सात्त्विको मत

इत्येवं पूर्वोक्तेन कर्मासक्तितत्फलयोस्त्यागलक्षणेन संन्यासेन नैष्कर्म्यसिद्धिं सर्वकर्मनिवृत्तिलक्षणां सत्त्वशुद्धिमधिगच्छति । यद्यपि सङ्गफलयोस्त्यागेन कर्मानुष्ठानमपि नैष्कर्म्यमेव, कर्तृत्वाभिनिवेशाभावात्, तदुक्तम्—'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यादिश्लोकचतुष्टयेन, तथाप्यनेनोक्तलक्षणेन संन्यासेन परमां नैष्कर्म्यसिद्धिं 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' इत्येवंलक्षणां पारमहंस्यापरपर्यायां प्राप्नोति ॥ ४९ ॥

एवम्भूतस्य परमहंसस्य ज्ञाननिष्ठया ब्रह्मभावप्रकारमाह—

**सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥**

सिद्धिं प्राप्त इति षड्भिः । नैष्कर्म्यसिद्धिं प्राप्तः सन् यथा येन प्रकारेण ब्रह्म प्राप्नोति तथा तं प्रकारं सङ्क्षेपेणैव मे वचनान्निबोध ॥ ५० ॥

तदेवाह—

**बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।**
**शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥**

बुद्ध्येति । उक्तेन प्रकारेण विशुद्धया पूर्वोक्तया सात्त्विकबुद्ध्या युक्तः, धृत्या सात्त्विक्या आत्मानं कार्यकारणसङ्घातं तामेव बुद्धिं नियम्य निश्चलां कृत्वा, शब्दादीन्विषयांस्त्यक्त्वा तद्विषयौ रागद्वेषौ च व्युदस्य । 'बुद्ध्या विशुद्धया युक्तः' इत्यादीनां 'ब्रह्मभूयाय कल्पते' इति तृतीयेनान्वयः ॥ ५१ ॥

किञ्च—

**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥**

विविक्तेति । विविक्तसेवी शुद्धदेशावस्थायी, लघ्वाशी मितभोजी । एतैरुपायैर्यतवाक्कायमानसः संयतवाग्देहचित्तो भूत्वा नित्यं सर्वदा ध्यानेन यो योगो ब्रह्मसंस्पर्शस्तत्परः सन्, ध्यानाद्यविच्छेदार्थं पुनः पुनर्दृढं वैराग्यं सम्यगुपाश्रितो भूत्वा ॥ ५२ ॥

किञ्च—

**अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥**

अहङ्कारमिति । ततश्च विरक्तोऽहमित्याद्यहङ्कारं, बलं दुराग्रहं, दर्पं योगब-लादुन्मार्गप्रवृत्तिलक्षणम् , प्रारब्धवशात्प्राप्यमाणेष्वपि विषयेषु कामं, क्रोधं परिग्रहं च विमुच्य विशेषेण त्यक्त्वा, बलादापन्नेषु निर्ममः सन् , शान्तः परामुपशान्ति प्राप्तो ब्रह्मभूयाय ब्रह्माहमिति नैश्चल्येनावस्थानाय कल्पते योग्यो भवति ॥ ५३ ॥

ब्रह्माहमित्येवं नैश्चल्येनावस्थानस्य फलमाह—

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥

ब्रह्मभूत इति । ब्रह्मभूतो ब्रह्मण्यवस्थितः प्रसन्नचित्तो नष्टं न शोचति । न चाऽप्राप्तं काङ्क्षति देहाद्यभिमानाभावात् । अत एव सर्वेष्वपि भूतेषु समः सन् रागद्वेषादिकृतविक्षेपाभावात्सर्वभूतेषु मद्भावनालक्षणां परां मद्भक्तिं लभते ॥ ५४ ॥

ततश्च—

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

भक्त्या मामिति । तथा च परया भक्त्या तत्त्वतो मामभिजानाति । कथम्भूतम् । यावान् सर्वव्यापी यश्चास्मि सच्चिदानन्दघनस्तथाभूतम् । ततश्च मामेवं तत्त्वतो ज्ञात्वा तदनन्तरं तस्य ज्ञानस्याप्युपरमे सति मां विशते । परमानन्दरूपो भवतीत्यर्थः ॥ ५५ ॥

स्वकर्मभिः परमेश्वराराधनादुक्तं मोक्षप्रकारमुपसंहरति—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

सर्वकर्माणीति । सर्वकर्माणि नित्यनैमित्तिकानि काम्यानि च कर्माणि पूर्वोक्तक्रमेण मद्व्यपाश्रयः सन् कुर्वाणोऽहमेव व्यपाश्रय आश्रयणीयो नतु स्वर्गादिफलं यस्य सः मत्प्रसादाच्छाश्वतमनादि अव्ययं नित्यं सर्वोत्कृष्टं वैष्णवं पदं प्राप्नोति ॥ ५६ ॥

यस्मादेवं तस्मात्—

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥

चेतसेति। सर्वकर्माणि चेतसा मयि संन्यस्य समर्प्य मत्परः अहमेव परः प्राप्यः पुरुषार्थो यस्य सः। व्यवसायात्मिकया बुद्ध्या योगमाश्रित्य सततं कर्मानुष्ठानकालेऽपि 'ब्रह्मार्पणं ब्रह्महविः' इति न्यायेन मय्येव चित्तं यस्य तथाभूतो भव ॥५७॥

ततो यद्भविष्यति तच्छृणु—

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥

मच्चित्त इति। मच्चित्तः सन् मत्प्रसादात्सर्वाण्यपि दुर्गाणि दुस्तराणि सांसारिकाणि दुःखानि तरिष्यसि। विपक्षे दोषमाह—अथ चेद्यदि पुनस्त्वमहङ्कारात्ज्ञातृत्वाभिमानान्मदुक्तमेतन्न श्रोष्यसि तर्हि विनङ्क्ष्यसि पुरुषार्थाद्भ्रश्यसि ॥ ५८ ॥

कामं विनङ्क्ष्यामि नतु बन्धुभिर्युद्धं करिष्यामीति चेत्तत्राह—

यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥

यदिति। मदुक्तमनादृत्य केवलमहङ्कारमवलम्ब्य युद्धं न करिष्यामीति त्वं यन्मन्यसेऽध्यवस्यसि एष तेऽध्यवसायो मिथ्यैव, अस्वतन्त्रत्वात्तव। तदेवाह—प्रकृतिस्त्वां रजोगुणरूपेण परिणता सती नियोक्ष्यति युद्धे प्रवर्तयिष्यत्येव ॥ ५९ ॥

किञ्च—

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥

स्वभावेति। स्वभावः क्षत्रियत्वे हेतुः पूर्वकर्मसंस्कारस्तस्माज्जातेन स्वकीयेन कर्मणा शौर्यादिना पूर्वोक्तेन निबद्धो यन्त्रितस्त्वं मोहाद्यत्कर्म युद्धलक्षणं कर्तुं नेच्छसि, अवशोऽपि तत्कर्म करिष्यस्येव ॥ ६० ॥

तदेवं श्लोकद्वयेन साङ्ख्यादिमतेन प्रकृतिपारतन्त्र्यं स्वभावपारतन्त्र्यं कर्मपारतन्त्र्यं चोक्तम्। इदानीं स्वमतमाह—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

ईश्वर इति द्वाभ्याम्। सर्वभूतानां हृदयमध्ये ईश्वरोऽन्तर्यामी तिष्ठति। किं कुर्वन्। सर्वाणि भूतानि मायया निजशक्त्या भ्रामयन् तत्तत्कर्मसु प्रवर्तयन्। यथा दारुयन्त्रमारूढानि कृत्रिमाणि भूतानि सूत्रधारो लोके भ्रामयति तद्वदित्यर्थः। यद्वा यन्त्राणि शरीराणि आरूढानि भूतानि देहाभिमानिनो जीवान् भ्रामयन्नित्यर्थः। तथाच श्वेताश्वतराणां मन्त्रः—'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति। अन्तर्यामिब्राह्मणं च 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति यमात्मा न वेद यस्यात्मा शरीरं एष त आत्मान्तर्याम्यमृतः' इत्यादि॥ ६१॥

तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥६२॥

तमिति। यस्मादेवं सर्वे जीवाः परमेश्वरपरतन्त्रास्तस्मादहङ्कारं परित्यज्य सर्वभावेन सर्वात्मना तमीश्वरमेव शरणं गच्छ। ततस्तस्यैव प्रसादात्परमामुत्कृष्टामुपशान्तिं स्थानं च पारमेश्वरं शाश्वतं नित्यं प्राप्स्यसि॥ ६२॥

सर्वगीतार्थमुपसंहरन्नाह—

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु॥ ६३॥

इतीति। इति अनेन प्रकारेण ते तुभ्यं सर्वज्ञेन परमकारुणिकेन मया ज्ञानमाख्यातमुपदिष्टम्। कथम्भूतम् गुह्याद्गोप्याद्रहस्यमन्त्रयोगादिज्ञानादपि गुह्यतरं एतन्मयोपदिष्टं गीताशास्त्रमशेषतो विमृश्य पर्यालोच्य पश्चाद्यथेच्छसि तथा कुरु। एतस्मिन्पर्यालोचिते सति तव मोहो निवर्तिष्यत इति भावः॥ ६३॥

अतिगम्भीरं गीताशास्त्रमशेषतः पर्यालोचयितुमशक्नुवतः कृपया स्वयमेव तस्य सारं सङ्गृह्य कथयति—

सर्वगुह्यतमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्॥ ६४॥

सर्वगुह्यतममिति त्रिभिः। सर्वेभ्योऽपि गुह्येभ्यो गुह्यतमं मे वचः तत्रतत्रोक्तमपि भूयः पुनरपि वक्ष्यमाणं शृणु। पुनःपुनः कथने हेतुमाह—दृढमत्यन्तं

मे मम त्वमिष्टः प्रियोऽसीति मत्वा तत एव हेतोस्ते हितं वक्ष्यामि । यद्वा त्वं ममेष्टोऽसि मया वक्ष्यमाणं च दृढं सर्वप्रमाणोपेतमिति निश्चित्य ततस्ते वक्ष्यामीत्यर्थः । दृढमतिरिति केचित्पठन्ति ॥ ६४ ॥

तदेवाह—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥

मन्मना इति । मन्मना भव, मच्चित्तो भव, ममैव भक्तो भव, मद्याजी मद्यजनशीलो भव, मामेव नमस्कुरु । एवं वर्तमानस्त्वं मत्प्रसादाल्लब्धज्ञानेन मामेवैष्यसि प्राप्स्यसि । अत्र च संशयं मा कार्षीः । त्वं हि मे प्रियोऽसि । अतः सत्यं यथाभवत्येवं तुभ्यमहं प्रतिजाने प्रतिज्ञां करोमि ॥ ६५ ॥

ततोऽपि गुह्यतममाह—

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

सर्वेति । मद्भक्त्यैव सर्वं भविष्यतीति दृढविश्वासेन विधिकैङ्कर्यं त्यक्त्वा मदेकशरणो भव । एवं वर्तमानः कर्मत्यागनिमित्तं पापं स्यादिति मा शुचः शोकं मा कार्षीः । यतस्त्वा त्वां मदेकशरणं सर्वपापेभ्योऽहं मोक्षयिष्यामि ॥ ६६ ॥

एवं गीतार्थतत्त्वमुपदिश्य तत्सम्प्रदायप्रवर्तने नियममाह—

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥

इदमिति । इदं गीतार्थतत्त्वं ते त्वयाऽतपस्काय स्वधर्मानुष्ठानहीनाय न वाच्यम् । न चाभक्ताय गुरावीश्वरे च भक्तिशून्याय कदाचिदपि न वाच्यम्, न चाशुश्रूषवे श्रोतुमनिच्छते परिचर्यामकुर्वते वाच्यम्, मां परमेश्वरं योऽभ्यसूयति मनुष्यदृष्ट्या दोषारोपेण निन्दति तस्मै च न वाच्यम् ॥ ६७ ॥

एतैर्दोषैर्विरहितेभ्यो मद्भक्तेभ्यो गीताशास्त्रोपदेष्टुः फलमाह—

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥

य इति । मद्भक्तेष्वभिधास्यति मद्भक्तेभ्यो यो वक्ष्यति स मयि परां भक्तिं करोति । ततो निःसंशयः सन् मामेव प्राप्नोतीत्यर्थः ॥ ६८ ॥

किञ्च—

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥

न चेति । तस्मान्मद्भक्तेभ्यो गीताशास्त्रव्याख्यातुः सकाशादन्यो मनुष्येषु मध्ये कश्चिदपि मम प्रियकृत्तमोऽत्यन्तं परितोषकर्ता नास्ति । नच कालान्तरे भविता भविष्यति । ममापि तस्मादन्यः प्रियतरोऽधुना भुवि तावन्नास्ति । नच कालान्तरेऽपि भविष्यतीत्यर्थः ॥ ६९ ॥

पठतः फलमाह—

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

अध्येष्यत इति । आवयोः कृष्णार्जुनयोः इमं धर्म्यं धर्मादनपेतं संवादं योऽध्येष्यते जपरूपेण पठिष्यति तेन पुंसा सर्वयज्ञेभ्यः श्रेष्ठेन ज्ञानयज्ञेनाहमिष्टः स्यां भवेयमिति मतिः । यदप्यसौ गीतार्थमबुद्ध्यमान एव केवलं जपति तथापि मम तच्छृण्वतो मामेवासौ प्रकाशयतीति बुद्धिर्भवति । यथा लोके यदृच्छयापि कश्चित्कदाचित्कस्यचिन्नाम गृह्णाति तदासौ मामेवायमाह्वयतीति मत्वा तत्पार्श्वमागच्छति, तथाहमपि तस्य सन्निहितो भवेयम् । अतएव अजामिलक्षत्रबन्धुप्रमुखानां कथञ्चिन्नामोच्चारणमात्रेण प्रसन्नोऽस्मि, तथैवास्यापि प्रसन्नो भवेयमित्यर्थः ॥ ७० ॥

अन्यस्य जपतो योऽन्यः कश्चिच्छृणोति तस्यापि फलमाह—

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥

श्रद्धावानिति । यो नरः श्रद्धायुक्तः केवलं शृणुयादपि श्रद्धावानपि कश्चित्किमर्थमुच्चैर्जपति अबद्धं जपतीति वा दोषदृष्टिं करोति। तद्व्यावृत्त्यर्थमाह—अनसूयश्च असूयारहितो यः शृणुयात्सोऽपि सर्वैः पापैर्मुक्तः सन् अश्वमेधादिपुण्यकृतांल्लोकान्प्राप्नुयात् ॥ ७१ ॥

सम्यग्बोधानुत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेनाह—

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ॥ ७२ ॥

कच्चिदिति । कच्चिदिति प्रश्नार्थे । अज्ञानसम्मोहः तत्त्वाज्ञानकृतो विपर्ययः । स्पष्टमन्यत् ॥ ७२ ॥

कृतार्थः सन्—

अर्जुन उवाच ।

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥

नष्ट इति । आत्मविषयो मोहो नष्टः । यतोऽयमहमस्मीति स्वरूपानुसन्धानरूपा स्मृतिस्त्वत्प्रसादान्मया लब्धा । अतः स्थितोऽस्मि युद्धायोपस्थितोऽस्मि । गतो धर्मविषयः सन्देहो यस्य सोऽहं तवाज्ञां करिष्य इति ॥ ७३ ॥

तदेवं धृतराष्ट्रं प्रति श्रीकृष्णार्जुनसंवादं कथयित्वा प्रस्तुतां कथामनुसन्दधानः—

सञ्जय उवाच ।

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

इतीति । रोमहर्षणं रोमाञ्चकरं संवादमश्रौषं श्रुतवानहम् । स्पष्टमन्यत् ॥ ७४ ॥

आत्मनस्तच्छ्रवणे सम्भावनामाह—

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥

व्यासप्रसादादिति । भगवता व्यासेन दिव्यं चक्षुःश्रोत्रादि मह्यं दत्तम् । अतो व्यासस्य प्रसादादेतदहं श्रुतवानस्मि । किं तदित्यपेक्षायामाह—परं योगम् । परत्वमाविष्करोति—योगेश्वराच्छ्रीकृष्णात्स्वयमेव साक्षात्कथयतः श्रुतवानिति ॥ ७५ ॥

किञ्च—

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

राजन्निति। हृष्यामि रोमाञ्चितो भवामि हर्षं प्राप्नोमीति वा। स्पष्टमन्यत्॥७६॥

किञ्च—

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः।**
**विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः॥ ७७॥**

तच्चेति। तदिति विश्वरूपं निर्दिशति। स्पष्टमन्यत्॥ ७७॥

अतस्त्वं पुत्राणां राज्यादिशङ्कां परित्यजेत्याशयेनाह—

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥ ७८॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासयोगो नामाष्टादशोऽध्यायः॥ १८॥

यत्रेति। यत्र येषां पाण्डवानां पक्षे योगेश्वरः श्रीकृष्णो वर्तते, यत्र च पार्थो गाण्डीवधनुर्धरः तत्रैव श्रीः राज्यलक्ष्मीः, तत्रैव च विजयः, तत्रैव च भूतिरुत्तरोत्तराभिवृद्धिश्च, तत्रैव नीतिर्नयोऽपि ध्रुवा निश्चितेति सर्वत्र सम्बध्यते। इति मम मतिर्निश्चयः। अत इदानीमपि तावत्सपुत्रस्त्वं श्रीकृष्णं शरणमुपेत्य पाण्डवान्प्रसाद्य सर्वस्वं च तेभ्यो निवेद्य पुत्रप्राणरक्षणं कुर्विति भावः॥ ७८॥

भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधतः।
सुखं बन्धविमुक्तिः स्यादिति गीतार्थसङ्ग्रहः॥ १॥

तथाहि 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया', 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन' इत्यादौ भगवद्भक्तेर्मोक्षं प्रति साधकतमत्वश्रवणात्तदेकान्तभक्तिरेव तत्प्रसादोत्थज्ञानावान्तरव्यापारमात्रयुक्ता मोक्षहेतुरिति स्फुटं प्रतीयते। ज्ञानस्य च भक्त्यवान्तरव्यापारत्वमेव युक्तम्। 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते', 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' इत्यादिवचनात्तत्त्वज्ञानमेव भक्तिरिति युक्तम्। 'समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्। भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः' इत्यादौ भेदेन निर्देशात्। न चैवं सति 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिविरोधः शङ्कनीयः, भक्त्यवान्तरव्यापारत्वाज्ज्ञानस्य। न हि

काष्ठैः पचतीत्युक्ते ज्वालानामसाधनत्वमुक्तं भवति। किञ्च 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' 'देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे' 'यमेवैष वृणुते तेन लभ्यः' इत्यादिश्रुतिस्मृतिपुराणवचनान्येवं सति समञ्जसानि भवन्ति तस्माद्भगवद्भक्तिरेव मोक्षहेतुरिति सिद्धम् ॥

तेनैव दत्तया मत्या तद्गीताविवृतिः कृता।
स एव परमानन्दस्तया प्रीणातु माधवः ॥ १ ॥
परमानन्दपादाब्जरजःश्रीधारिणाधुना।
श्रीधरस्वामियतिना कृता गीतासुबोधिनी ॥ २ ॥
स्वप्रागल्भ्यबलाद्विलोड्य भगवद्गीतां तदन्तर्गतं।
तत्त्वं पेप्सुरुपैति किं गुरुकृपापीयूषदृष्टिं विना।
अम्बु स्वाञ्जलिना निरस्य जलधेरादित्सुरन्तर्मणीनावर्तेषु न किं निमज्जति जनः सत्कर्णधारं विना ॥ ३ ॥

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे योगशास्त्रनिर्णयसन्न्यासादितत्त्वनिर्णये श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां संन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

प्राप्तिस्थानम्—
चौखम्बा—संस्कृत—पुस्तकालय
बनारस सिटी।

श्रीः ।

# श्रीमद्भगवद्गीताश्लोकानामकारादिवर्णानुक्रमः ।


| | श्लो० | पृ० |
|---|---|---|
| ॐ तत्सदिति निर्देशः | २३ | १७९ |
| अकीर्तिं चापि भूतानि | ३४ | २० |
| अक्षरं ब्रह्म परमम् | ३ | ९० |
| अक्षराणामकारोऽस्मि | ३३ | ११७ |
| अग्निर्ज्योतिरहः शुक्लः | २४ | ९७ |
| अच्छेद्योऽयमदाह्योऽयम् | २४ | १७ |
| अजोऽपि सन्नव्ययात्मा | ६ | ४६ |
| अज्ञश्चाश्रद्दधानश्च | ४० | ५७ |
| अत्र शूरा महेष्वासा | ४ | २ |
| अथ केन प्रयुक्तोऽयम् | ३६ | ४२ |
| अथ चित्तं समाधातुम् | ९ | १३७ |
| अथ चेत्त्वमिमं धर्म्यम् | ३३ | २० |
| अथ चैनं नित्यजातम् | २६ | १८ |
| अथैतदप्यशक्तोऽसि | ११ | १३७ |
| अथवा बहुनैतेन | ४२ | ११९ |
| अथवा योगिनामेव | ४२ | ७८ |
| अथ व्यवस्थितान्दृष्ट्वा | २० | ५ |
| अदेशकाले यद्दानम् | २२ | १७९ |
| अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा | ४५ | १३१ |
| अद्वेष्टा सर्वभूतानाम् | १३ | १३८ |
| अधर्मं धर्ममिति या | ३२ | १९२ |
| अधर्माभिभवात्कृष्ण | ४० | ९ |
| अधश्चोर्ध्वं प्रसृतास्तस्य शाखाः | २ | १६० |
| अधिभूतं क्षरो भावः | ४ | ९० |
| अधिष्ठानं तथा कर्ता | १४ | १८७ |
| अधियज्ञः कथं कोऽत्र | २ | ९० |
| अध्यात्मज्ञाननित्यत्वम् | ११ | १४३ |

| | श्लो० | पृ० |
|---|---|---|
| अध्येष्यते च य इमम् | ७० | २०२ |
| अनन्तश्चास्मि नागानाम् | २९ | ११६ |
| अनन्तविजयं राजा | १६ | ५ |
| अनपेक्षः शुचिर्दक्षः | १६ | १३८ |
| अनन्यचेताः सततम् | १४ | ९३ |
| अनन्याश्चिन्तयन्तो माम् | २२ | १०५ |
| अनादित्वान्निर्गुणत्वात् | ३१ | १५० |
| अनादिमध्यान्तमनन्तवीर्यम् | १९ | १२४ |
| अनाश्रितः कर्मफलम् | १ | ६८ |
| अन्नाद्भवन्ति भूतानि | १४ | ३६ |
| अनिष्टमिष्टं मिश्रं च | १२ | १८६ |
| अनुद्वेगकरं वाक्यम् | १५ | १७७ |
| अनुबन्धं क्षयं हिंसाम् | २५ | १९० |
| अनेकचित्तविभ्रान्ताः | १६ | १७० |
| अनेकबाहूदरवक्त्रनेत्रम् | १६ | १२३ |
| अनेकवक्त्रनयनम् | १० | १२२ |
| अन्तकाले च मामेव | ५ | ९१ |
| अन्तवत्तु फलं तेषाम् | २३ | ८७ |
| अन्तवन्त इमे देहाः | १८ | १५ |
| अन्ये च बहवः शूराः | ९ | ३ |
| अन्ये त्वेवमजानन्तः | २५ | १४८ |
| अपरं भवतो जन्म | ४ | ४६ |
| अपरे नियताहाराः | ३० | ५४ |
| अपरेयमितस्त्वन्याम् | ५ | ८२ |
| अपर्याप्तं तदस्माकम् | १० | ३ |
| अपाने जुह्वति प्राणम् | २९ | ५४ |
| अपि चेदसि पापेभ्यः | ३६ | ५६ |

| | श्लो० | पृ० |
|---|---|---|
| अपि चेत्सुदुराचारः | ३० | १०७ |
| अपि त्रैलोक्यराज्यस्य | ३५ | ८ |
| अप्रकाशो प्रवृत्तिश्च | १३ | १५५ |
| अफलाकाङ्क्षिभिर्यज्ञः | ११ | ७७ |
| अभयं सत्त्वसंशुद्धिः | १ | १६६ |
| अभिसन्धाय तु फलम् | १२ | १७७ |
| अभ्यासेऽप्यसमर्थोऽसि | १० | १३७ |
| अभ्यासयोगयुक्तेन | ८ | ९२ |
| अमानित्वमदम्भित्वम् | ७ | १४२ |
| अमी च त्वां धृतराष्ट्रस्य पुत्राः | २६ | १२६ |
| अमी हि त्वां सुरसङ्घा विशन्ति | २१ | १२५ |
| अयतिः श्रद्धयोपेतो | ३७ | ७७ |
| अयनेषु च सर्वेषु | ११ | ४ |
| अयुक्तःप्राकृतः स्तब्धः | २८ | १९१ |
| अवजानन्ति मां मूढाः | ११ | १०२ |
| अवाच्यवादांश्च बहून् | ३६ | २० |
| अविभक्तं च भूतेषु | १६ | १४५ |
| अविनाशि तु तद्विद्धि | १७ | १५ |
| अव्यक्तादीनि भूतानि | २८ | १८ |
| अव्यक्ताद्व्यक्तयः सर्वाः | १८ | ९५ |
| अव्यक्तोऽयमचिन्त्योऽयम् | २५ | १८ |
| अव्यक्तोऽक्षर इत्युक्तः | २१ | ९६ |
| अव्यक्तं व्यक्तिमापन्नम् | २४ | ८७ |
| अशास्त्रविहितं घोरम् | ५ | १७५ |
| अशोच्यानन्वशोचस्त्वम् | ११ | १३ |
| अश्रद्धया हुतं दत्तम् | २८ | १८१ |

| | श्लो० | पृ० |
|---|---|---|
| अश्रद्दधानाः पुरुषाः | ३ | ९९ |
| अश्वत्थः सर्ववृक्षाणाम् | २६ | ११५ |
| असक्तबुद्धिः सर्वत्र | ४९ | १९६ |
| असक्तिरनभिष्वङ्गः | ९ | १४३ |
| असत्यमप्रतिष्ठन्ते | ८ | १६८ |
| असौ मया हतः शत्रुः | १४ | १७० |
| असंयतात्मना योगो | ३६ | ७७ |
| असंशयं महाबाहो | ३५ | ७६ |
| अस्माकं तु विशिष्टा ये | ७ | ३ |
| अहङ्कारं बलं दर्पम् | १८ | १७१ |
| अहङ्कारं बलं दर्पम् | ५३ | १९७ |
| अहं क्रतुरहं यज्ञः | १६ | १०३ |
| अहमात्मा गुडाकेश | २० | ११४ |
| अहो बत महत्पापम् | ४४ | १० |
| अहं वैश्वानरो भूत्वा | १४ | १६३ |
| अहं सर्वस्य प्रभवः | ८ | १११ |
| अहं हि सर्वयज्ञानाम् | २४ | १०५ |
| अहिंसा सत्यमक्रोधः | २ | १६६ |
| अहिंसा समता तुष्टिः | ५ | ११० |
| आख्याहि मे को भवानुग्ररूपः | ३१ | १२७ |
| आढ्योऽभिजनवानस्मि | १५ | १७० |
| आत्मसम्भाविताः स्तब्धाः | १७ | १७० |
| आत्मौपम्येन सर्वत्र | ३२ | ७६ |
| आदित्यानामहं विष्णुः | २१ | ११४ |
| आपूर्यमाणमचलप्रतिष्ठम् | ७० | ३० |
| आब्रह्मभुवनाल्लोकाः | १६ | ९४ |
| आयुधानामहं वज्रम् | २८ | ११५ |

| | श्लो० | पृ० | | श्लो० | पृ० |
|---|---|---|---|---|---|
| आयुः सत्त्वबलारोग्य | ८ | १७६ | इष्टान्भोगान्हि वो देवाः | १२ | ३५ |
| आरुरुक्षोर्मुनेर्योगम् | ३ | ६८ | इहैकस्थं जगत्कृत्स्नम् | ७ | १२१ |
| आवृतं ज्ञानमेतेन | ३९ | ४३ | इहैव तैर्जितः सर्गः | १९ | ६४ |
| आश्चर्यवत्पश्यति कश्चिदेनम् | २९ | १९ | ईश्वरः सर्वभूतानाम् | ६१ | १९९ |
| आशापाशशतैर्बद्धाः | १२ | १६९ | उच्चैःश्रवसमश्वानाम् | २७ | ११५ |
| आसुरीं योनिमापन्नाः | २० | १७१ | उत्क्रामन्तं स्थितं वापि | १० | १६२ |
| आहारस्त्वपि सर्वस्य | ७ | १७५ | उत्तमः पुरुषस्त्वन्यः | १७ | १६४ |
| आहुस्त्वामृषयः सर्वे | १३ | ११२ | उत्सन्नकुलधर्माणाम् | ४३ | १० |
| ओमित्येकाक्षरं ब्रह्म | १३ | ९३ | उत्सीदेयुरिमे लोकाः | २४ | ३९ |
| इच्छा द्वेषः सुखं दुःखम् | ६ | १४२ | उदाराः सर्व एवैते | १८ | ८५ |
| इच्छा द्वेषसमुत्थेन | २७ | ८८ | उदासीनवदासीनः | २३ | १५८ |
| इति क्षेत्रं तथा ज्ञानम् | १८ | १४६ | उद्धरेदात्मनात्मानम् | ५ | ६९ |
| इति गुह्यतमं शास्त्रम् | २० | १६५ | उपद्रष्टाऽनुमन्ता च | २२ | १४७ |
| इति ते ज्ञानमाख्यातम् | ६३ | २०० | ऊर्ध्वमूलमधः शाखम् | १ | १५९ |
| इत्यर्जुनं वासुदेवस्तथोक्त्वा | ५० | १३३ | ऊर्ध्वं गच्छन्ति सत्त्वस्थाः | १८ | १५६ |
| इत्यहं वासुदेवस्य | ७४ | २०३ | ऋषिभिर्बहुधा गीतम् | ४ | १४१ |
| इदमद्य मया लब्धम् | १३ | १६९ | एतच्छ्रुत्वा वचनं केशवस्य | ३५ | १२८ |
| इदं ज्ञानमुपाश्रित्य | २ | १५२ | एतद्योनीनि भूतानि | ६ | ८२ |
| इदं तु ते गुह्यतमम् | १ | ९९ | एतन्मे संशयं कृष्ण | ३९ | ७८ |
| इदं ते नातपस्काय | ६७ | २०१ | एतान्यपि तु कर्माणि | ६ | १८५ |
| इदं शरीरं कौन्तेय | १ | १४० | एतां दृष्टिमवष्टभ्य | ९ | १६८ |
| इन्द्रियस्येन्द्रियस्यार्थे | ३४ | ४१ | एतां विभूतिं योगं च | ७ | १११ |
| इन्द्रियाणि पराण्याहुः | ४२ | ४४ | एतैर्विमुक्तः कौन्तेय | २२ | १७२ |
| इन्द्रियाणि मनो बुद्धिः | ४० | ४३ | एवमुक्त्वा ततो राजन् | ९ | १२२ |
| इन्द्रियाणां हि चरताम् | ६७ | २९ | एवमुक्त्वाऽर्जुनः सङ्ख्ये | ४६ | १० |
| इन्द्रियार्थेषु वैराग्यम् | ८ | १४३ | एवमुक्त्वा हृषीकेशम् | ९ | १३ |
| इमं विवस्वते योगम् | १ | ४५ | एवमुक्तो हृषीकेशो | २४ | ६ |

| | श्लो० | पृ० |
|---|---|---|
| एवमेतद्यथात्थ त्वम् | ३ | १२० |
| एवं ज्ञात्वा कृतं कर्म | १५ | ४९ |
| एवं परम्पराप्राप्तम् | २ | ४५ |
| एवं प्रवर्तितं चक्रम् | १६ | ३७ |
| एवं बहुविधा यज्ञा | ३२ | ५५ |
| एवं बुद्धेः परं बुद्ध्वा | ४३ | ४४ |
| एवं सततयुक्ता ये | १ | १३५ |
| एषा तेऽभिहिता साङ्ख्ये | ३९ | २१ |
| एषा ब्राह्मी स्थितिः पार्थ | ७२ | ३१ |
| कच्चिन्नोभयविभ्रष्टः | ३८ | ७७ |
| कट्वम्ललवणात्युष्ण | ९ | १७६ |
| कथं भीष्ममहं सङ्ख्ये | ४ | ११ |
| कथं न ज्ञेयमस्माभिः | ३८ | ९ |
| कथं विद्यामहं योगिन् | १७ | ११३ |
| कर्मजं बुद्धियुक्ता हि | ५१ | २५ |
| कर्मणः सुकृतस्याहुः | १६ | १५६ |
| कर्मणैव हि संसिद्धिम् | २० | ३८ |
| कर्मणो ह्यपि बोद्धव्यम् | १७ | ५० |
| कर्मण्यकर्म यः पश्येत् | १८ | ५० |
| कर्मण्येवाधिकारस्ते | ४७ | २४ |
| कर्म ब्रह्मोद्भवं विद्धि | १५ | ३६ |
| कर्मेन्द्रियाणि संयम्य | ६ | ३४ |
| कर्शयन्तः शरीरस्थम् | ६ | १७५ |
| किरीटिनं गदिनं चक्रिणं च | १७ | १२३ |
| किरीटिनं गदिनं चक्रहस्तम् | ४६ | १३७ |
| कविं पुराणमनुशासितारम् | ९ | ९२ |
| काम एष क्रोध एषः | ३७ | ४२ |
| कस्माच्च तेन नमेरन् महात्मन् | ३७ | १२९ |
| काङ्क्षन्तः कर्मणां सिद्धिम् | १२ | ४८ |
| कामक्रोधवियुक्तानाम् | २६ | ६६ |
| काममाश्रित्य दुष्पूरम् | १० | १३९ |
| कामात्मनः स्वर्गपरा | ४३ | २२ |
| कामैस्तैस्तैर्हृतज्ञानाः | २० | ८६ |
| काम्यानां कर्मणां न्यासम् | २ | १८२ |
| कायेन मनसा बुद्ध्या | ११ | ६१ |
| कार्पण्यदोषोपहतस्वभावः | ७ | १२ |
| कार्यकारणकर्तृत्वे | २० | १४७ |
| कार्यमित्येव यत्कर्म | ९ | १८५ |
| कालोऽस्मि लोकक्षयकृत्प्रवृद्धः | ३२ | १२७ |
| काश्यश्च परमेष्वासः | १७ | ५ |
| किं कर्म किमकर्मेति | १६ | ४९ |
| किं तद्ब्रह्म किमध्यात्मम् | १ | ८९ |
| किं नो राज्येन गोविन्द | ३२ | ८ |
| किं पुनर्ब्राह्मणाःपुण्याः | ३३ | १०८ |
| कुतस्त्वा कश्मलमिदम् | २ | ११ |
| कुलक्षये प्रणश्यन्ति | ३९ | ९ |
| कृषिगौरक्ष्यवाणिज्यम् | ४४ | १९५ |
| कैर्लिङ्गैस्त्रीन्गुणानेतान् | २७ | १५७ |
| क्लेशोऽधिकतरस्तेषाम् | ५ | १३६ |
| क्लैब्यं मा स्म गमः पार्थ | ३ | ११ |
| क्रोधाद्भवति सम्मोहः | ६३ | २८ |
| कच्चिदेतच्छ्रुतं पार्थ | ७२ | २०३ |
| क्षिप्रं भवति धर्मात्मा | ३१ | १०७ |
| क्षेत्रक्षेत्रज्ञयोरेवम् | ३४ | १५१ |

| | श्लो० | पृ० |
|---|---|---|
| क्षेत्रज्ञं चापि मां विद्धि | २ | १४० |
| गतसङ्गस्य मुक्तस्य | २३ | ५२ |
| गतिर्भर्ता प्रभुः साक्षी | १८ | १०३ |
| गुणानेतानतीत्य त्रीन् | २० | १५७ |
| गुरूनहत्वा हि महानुभावान् | ५ | १२ |
| चञ्चलं हि मनः कृष्ण | ३४ | ७६ |
| चतुर्विधा भजन्ते मां | १६ | ८५ |
| चातुर्वर्ण्यं मया सृष्टम् | १३ | ४८ |
| चिन्तामपरिमेयां च | ११ | १६९ |
| चेतसा सर्वकर्माणि | ५७ | १९८ |
| जन्म कर्म च मे दिव्यम् | ९ | ४७ |
| जरामरणमोक्षाय | २९ | ८८ |
| जातस्य हि ध्रुवो मृत्युः | २७ | १८ |
| जितात्मनः प्रशान्तस्य | ७ | ६९ |
| ज्यायसी चेत्कर्मणस्ते | १ | ३२ |
| ज्योतिषामपि तज्ज्योतिः | १७ | १४६ |
| ज्ञानयज्ञेन चाप्यन्ये | १५ | १०३ |
| ज्ञानं कर्म च कर्ता च | १९ | १८९ |
| ज्ञानं तेऽहं सविज्ञानम् | २ | ८० |
| ज्ञानं ज्ञेयं परिज्ञाता | १८ | १८८ |
| ज्ञानविज्ञानतृप्तात्मा | ८ | ६९ |
| ज्ञानेन तु तदज्ञानम् | १६ | ६३ |
| ज्ञेयंयत्तत्प्रवक्ष्यामि | १२ | १४४ |
| ज्ञेयः स नित्यसंन्यासी | ३ | ५९ |
| त इमेऽवस्थिता युद्धे | ३३ | ८ |
| तच्च संस्मृत्य संस्मृत्य | ७७ | २०४ |
| ततःपदं तत्परिमार्गितव्यम् | ४ | १६१ |

| | श्लो० | पृ० |
|---|---|---|
| ततः शङ्खाश्च भेर्यश्च | १३ | ४ |
| ततः श्वेतैर्हयैर्युक्ते | १४ | ४ |
| ततः स विस्मयाविष्टो | १४ | १२३ |
| तत्क्षेत्रं यच्च यादृक्च | ३ | १४१ |
| तत्त्ववित्तु महाबाहो | २८ | ४० |
| तत्र तं बुद्धिसंयोगम् | ४३ | ७९ |
| तत्र सत्त्वं निर्मलत्वात् | ६ | १५३ |
| तत्रापश्यत्स्थितान्पार्थः | २६ | ६ |
| तत्रैकस्थं जगत्कृत्स्नम् | १३ | १२३ |
| तत्रैकाग्रं मनः कृत्वा | १२ | ७० |
| तत्रैवं सति कर्तारम् | १६ | १८७ |
| तदित्यनभिसन्धाय | २५ | १८० |
| तद्बुद्धयस्तदात्मानः | १७ | ६३ |
| तद्विद्धि प्रणिपातेन | ३४ | ५६ |
| तपाम्यहमहं वर्षम् | १९ | १०४ |
| तपस्विभ्योऽधिको योगी | ४६ | ७९ |
| तमस्त्वज्ञानजं विद्धि | ८ | १५३ |
| तमुवाच हृषीकेशः | १० | १३ |
| तमेव शरणं गच्छ | ६२ | २०० |
| तस्माच्छास्त्रं प्रमाणं ते | २४ | १७२ |
| तस्मात्त्वमुत्तिष्ठ यशो लभस्व | ३३ | १२८ |
| तस्मात्सर्वेषु कालेषु | ७ | ९१ |
| तस्मात्प्रणम्य प्रणिधाय कायम् | ४४ | १३१ |
| तस्मादज्ञानसम्भूतम् | ४२ | ५८ |
| तस्मादस्य महाबाहो | ६८ | ३० |
| तस्मादसक्तः सततम् | १९ | ३८ |
| तस्मादोमित्युदाहृत्य | २४ | १८० |

| | श्लो० | पृ० |
|---|---|---|
| तस्मात्त्वमिन्द्रियाण्यादौ | ४१ | ४४ |
| तस्य सञ्जनयन् हर्षम् | १२ | ४ |
| तानहं द्विषतः क्रूरान् | १९ | १७१ |
| तानि सर्वाणि संयम्य | ६१ | २८ |
| तान्समीक्ष्य स कौन्तेयः | २७ | ७ |
| तुल्यनिन्दास्तुतिर्मौनी | १९ | १३९ |
| तेजः क्षमा धृतिः शौचम् | ३ | १६७ |
| ते तं भुक्त्वा स्वर्गलोकं वि-शालम् | २१ | १०४ |
| तेषामहं समुद्धर्ता | ७ | १३६ |
| तेषामेवानुकम्पार्थम् | ११ | ११२ |
| तेषां ज्ञानी नित्ययुक्तः | १७ | ८५ |
| तेषां सततयुक्तानाम् | १० | १११ |
| तं तथा कृपयाविष्टम् | १ | ११ |
| तं विद्याद्दुःखसंयोग | २३ | ७३ |
| त्यक्त्वा कर्मफलासङ्गम् | २० | ५१ |
| त्याज्यं दोषवदित्येके | ३ | १८३ |
| त्रिभिर्गुणमयैर्भावैः | १३ | ८४ |
| त्रिविधा भवति श्रद्धा | २ | १७३ |
| त्रिविधं नरकस्येदम् | २१ | १७१ |
| त्रैविद्या मां सोमपाः पूतपापाः | २० | १०४ |
| त्रैगुण्यविषया वेदाः | ४५ | २३ |
| त्वमक्षरं परमं वेदितव्यम् | १८ | १२४ |
| त्वमादिदेवःपुरुषःपुराणः | ३८ | १२९ |
| दण्डो दमयतामस्मि | ३८ | ११८ |
| दम्भो दर्पोऽभिमानश्च | ४ | १६७ |
| दातव्यमिति य नम् | २० | १७९ |

| | श्लो० | पृ० |
|---|---|---|
| दिवि सूर्यसहस्रस्य | १२ | १२२ |
| दिव्यमाल्याम्बरधरम् | ११ | १२२ |
| दुःखमित्येव यत्कर्म | ८ | १८५ |
| दुःखेष्वनुद्विग्नमनाः | ५६ | २६ |
| दूरेण ह्यवरं कर्म | ४९ | २४ |
| दृष्ट्वा तु पाण्डवानीकं | २ | २ |
| दृष्ट्वेदं मानुषं रूपम् | ५१ | १३३ |
| दृष्ट्वेमं स्वजनं कृष्ण | २८ | ७ |
| देवद्विजगुरुप्राज्ञ | १४ | १७७ |
| देवान्भावयतानेन | ११ | ३५ |
| देहिनोऽस्मिन्यथा देहे | १३ | १४ |
| देही नित्यमवध्योऽयम् | ३० | १९ |
| दैवमेवापरे यज्ञम् | २५ | ५३ |
| दैवी सम्पद्विमोक्षाय | ५ | १६७ |
| दैवी ह्येषा गुणमयी | १४ | ८४ |
| दोषैरेतैः कुलघ्नानाम् | ४२ | १० |
| दंष्ट्राकरालानि च ते मुखानि | २५ | १२६ |
| द्यावापृथिव्योरिदमन्तरं हि | २० | १२४ |
| द्यूतं छलयतामस्मि | ३६ | ११७ |
| द्रव्ययज्ञास्तपोयज्ञाः | २८ | ५४ |
| द्रुपदो द्रौपदेयाश्च | १८ | ५ |
| द्रोणं च भीष्मं च जयद्रथं च | ३४ | १२८ |
| द्वाविमौ पुरुषौ लोके | १६ | १६४ |
| द्वौ भूतसर्गौ लोकेऽस्मिन् | ६ | १६७ |
| धर्मक्षेत्रे कुरुक्षेत्रे | १ | २ |
| धूमेनाव्रियते वह्निः | ३८ | ४३ |
| धूमो रात्रिस्तथा कृष्णः | २५ | ९७ |

| | श्लो० | पृ० |
|---|---|---|
| धृत्या यया धारयते | ३३ | १९२ |
| धृष्टकेतुश्चेकितानः | ५ | २ |
| ध्यानेनात्मनि पश्यन्ति | २४ | १४८ |
| ध्यायतो विषयान्पुंसः | ६२ | २८ |
| न कर्तृत्वं न कर्माणि | १४ | ६३ |
| न कर्मणामनारम्भात् | ४ | ३३ |
| न च तस्मान्मनुष्येषु | ६९ | २०२ |
| न च मत्स्थानि भूतानि | ५ | १०० |
| न च मां तानि कर्माणि | ९ | १०१ |
| न च शक्नोम्यवस्थातुम् | ३० | ७ |
| न च श्रेयोऽनुपश्यामि | ३१ | ७ |
| न चैतद्विद्मः कतरन्नो गरीयो | ६ | १२ |
| न जायते म्रियते वा कदाचित् | २० | १६ |
| न तदस्ति पृथिव्यां वा | ४० | १९४ |
| न त्वेवाहं जातु नासम् | १२ | १४ |
| न द्वेष्ट्यकुशलं कर्म | १० | १९६ |
| न तद्भासयते सूर्यः | ६ | १६१ |
| न तु मां शक्यसे द्रष्टुम् | ८ | १२१ |
| न प्रहृष्येत्प्रियं प्राप्य | २० | ६४ |
| न बुद्धिभेदं जनयेत् | २६ | ३९ |
| नभःस्पृशं दीप्तमनेकवर्णम् | २४ | १२५ |
| नमः पुरस्तादथ पृष्ठतस्ते | ४० | १३० |
| न मां कर्माणि लिम्पन्ति | १४ | ४९ |
| न मां दुष्कृतिनो मूढाः | १५ | ८४ |
| न मे पार्थास्ति कर्तव्यम् | २२ | ३८ |
| न मे विदुःसुरगणाः | २ | १०९ |
| न रूपमस्येह तथोपलभ्यते | ३ | १६० |

| | पृ० | श्लो० |
|---|---|---|
| न वेदयज्ञाध्ययनैर्न दानैः | ४८ | १३२ |
| नष्टो मोहः स्मृतिर्लब्धा | ७३ | २०३ |
| न हि कश्चित्क्षणमपि | ५ | ३३ |
| न हि ज्ञानेन सदृशम् | ३८ | ५७ |
| न हि देहभृता शक्यम् | ११ | १८६ |
| नहि प्रपश्यामि ममापनुद्यात् | ८ | १३ |
| नात्यश्नतस्तु योगोऽस्ति | १६ | ७१ |
| नादत्ते कस्यचित्पापम् | १५ | ६३ |
| नान्तोऽस्ति मम दिव्यानाम् | ४० | ११७ |
| नान्यं गुणेभ्यः कर्तारम् | १९ | १५६ |
| नासतो विद्यते भावो | १६ | १५ |
| नास्ति बुद्धिरयुक्तस्य | ६६ | २९ |
| नाहं प्रकाशः सर्वस्य | २५ | ८७ |
| नाहं वेदैर्न तपसा | ५३ | १३३ |
| नियतं कुरु कर्म त्वम् | ८ | ३४ |
| नियतं सङ्गरहितम् | २३ | १९० |
| नियतस्य तु संन्यासः | ७ | १८५ |
| निर्मानमोहा जितसङ्गदोषाः | ५ | १६१ |
| निराशीर्यतचित्तात्मा | २१ | ५७ |
| निश्चयं शृणु मे तत्र | ४ | १८४ |
| नेहाभिक्रमनाशोऽस्ति | ४० | २१ |
| नैते सृती पार्थ जानन् | २७ | ९८ |
| नैनं छिन्दन्ति शस्त्राणि | २३ | १७ |
| नैव किञ्चित्करोमीति | ८ | ६१ |
| नैव तस्य कृतेनार्थो | १८ | ३७ |
| पञ्चैतानि महाबाहो | १३ | १८७ |
| पत्रं पुष्पं फलं तोयम् | २६ | १०६ |

| | श्लो० | पृ० |
|---|---|---|
| परस्तस्मात्तु भावोऽन्यो | २० | ९५ |
| परित्राणाय साधूनाम् | ८ | ४७ |
| परं ब्रह्म परं धाम | १२ | ११२ |
| परं भूयः प्रवक्ष्यामि | १ | १५१ |
| पवनः पवतामस्मि | ३१ | ११६ |
| पश्य मे पार्थ रूपाणि | ५ | १२१ |
| पश्यादित्यान्वसून् रुद्रान् | ६ | १२१ |
| पश्यामि देवांस्तव देव देहे | १५ | १२३ |
| पश्यैतां पाण्डुपुत्राणाम् | ३ | २ |
| पाञ्चजन्यं हृषीकेशो | १५ | ४ |
| पाञ्चजन्यं हृषीकेशो | १५ | ४ |
| पापमेवाश्रयेदस्मान् | ३६ | ८ |
| पार्थ नैवेह नामुत्र | ४० | ७८ |
| पितामहस्य जगतः | १७ | १०३ |
| पिताऽसि लोकस्य चराचरस्य | ४३ | १३१ |
| पुण्यो गन्धः पृथिव्यां च | ९ | ८३ |
| पुरुषः प्रकृतिस्थो हि | २१ | १४७ |
| पुरुषः स परः पार्थ | २२ | ९६ |
| पुरोधसां च मुख्यं माम् | २४ | ११५ |
| पूर्वाभ्यासेन तेनैव | ४४ | ७९ |
| पृथक्त्वेन तु यज्ज्ञानम् | २१ | १८९ |
| प्रकाशं च प्रवृत्तिं च | २२ | १५७ |
| प्रकृतिं पुरुषं चैव | १९ | १४६ |
| प्रकृतिं स्वामवष्टभ्य | ८ | १०१ |
| प्रकृतेः क्रियमाणानि | २७ | ४० |
| प्रकृतेर्गुणसम्मूढाः | २९ | ४० |
| प्रकृत्यैव च कर्माणि | २९ | १४९ |

| | श्लो० | पृ० |
|---|---|---|
| प्रजहाति यदा कामान् | ५५ | २६ |
| प्रयत्नाद्यतमानस्तु | ४५ | ७९ |
| प्रयाणकाले मनसा चलेन | १० | ९२ |
| प्रलपन्विसृजन्गृह्णन् | ९ | ६१ |
| प्रवृत्तिं च निवृत्तिं च | ७ | १६८ |
| प्रवृत्तिं च निवृत्तिं च | ३० | ९७ |
| प्रशान्तमनसं ह्येनम् | २७ | ७४ |
| प्रशान्तात्मा विगतभीः | १४ | ७१ |
| प्रसादे सर्वदुःखानाम् | ६५ | २९ |
| प्रह्लादश्चास्मि दैत्यानाम् | ३० | ११६ |
| प्राप्य पुण्यकृतांल्लोकान् | ४१ | ७८ |
| बन्धुरात्माऽऽत्मनः | ६ | ६९ |
| बलं बलवतामस्मि | ११ | ८३ |
| बाह्यस्पर्शेष्वसक्तात्मा | २१ | ६४ |
| बहिरन्तश्च भूतानाम् | १५ | १५४ |
| बहूनि मे व्यतीतानि | ५ | ४६ |
| बहूनां जन्मनामन्ते | १९ | ८६ |
| बीजं मां सर्वभूतानाम् | १० | ८३ |
| बुद्धिर्ज्ञानमसम्मोहः | ४ | ११० |
| बुद्धियुक्तो जहातीह | ५० | २५ |
| बुद्ध्या विशुद्धया युक्तः | ५१ | १९७ |
| बुद्धेर्भेदं धृतेश्चैव | २९ | १९१ |
| बृहत्साम तथा साम्नाम् | ३५ | ११७ |
| ब्रह्मणो हि प्रतिष्ठाहम् | २७ | १५९ |
| ब्रह्मभूतः प्रसन्नात्मा | ५४ | १९८ |
| ब्रह्मण्याधाय कर्माणि | १० | ६१ |
| ब्रह्मार्पणं ब्रह्म हविः | २४ | ५२ |

| | श्लो० | पृ० | | श्लो० | पृ० |
|---|---|---|---|---|---|
| ब्राह्मणक्षत्रियविशाम् | ४१ | १९४ | मय्यावेश्य मनो ये माम् | २ | १३५ |
| भक्त्यात्वनन्यया शक्यः | ५४ | १३४ | मय्यासक्तमनाः पार्थ | १ | ८० |
| भक्त्या मामभिजानाति | ५५ | १९८ | मयि चानन्ययोगेन | १० | १४३ |
| भयाद्रणादुपरतम् | ३५ | २० | मयि सर्वाणि कर्माणि | ३० | ४० |
| भवान् भीष्मश्च कर्णश्च | ८ | ३ | मय्येव मन आधत्स्व | ८ | १३६ |
| भवाप्ययौ हि भूतानाम् | २ | १२० | महर्षयः सप्त पूर्वे | ६ | ११० |
| भीष्मद्रोणप्रमुखतः | २५ | ६ | महर्षीणां भृगुरहम् | २५ | ११५ |
| भूतग्रामः स एवायम् | १९ | ९५ | महात्मानस्तु मां पार्थ | १३ | १०२ |
| भूमिरापोऽनलो वायुः | ४ | ८१ | महाभूतान्यहङ्कारः | ५ | १४२ |
| भूय एव महाबाहो | १ | १०९ | मातुलाः श्वशुराः पौत्राः | ३४ | ८ |
| भोक्तारं यज्ञतपसाम् | २९ | ६७ | मा ते व्यथा मा च विमूढभावः | ४९ | १६२ |
| भोगैश्वर्यप्रसक्तानाम् | ४४ | २३ | मात्रास्पर्शास्तु कौन्तेय | १४ | १४ |
| मच्चित्तः सर्वदुर्गाणि | ५८ | १९९ | मानापमानयोस्तुल्यः | २५ | १५८ |
| मच्चित्ता मद्गतप्राणाः | ९ | १११ | मामुपेत्य पुनर्जन्म | १५ | ९३ |
| मत्कर्मकृन्मत्परमः | ५५ | १३४ | मां च योऽव्यभिचारेण | २६ | १५८ |
| मत्तः परतरं नान्यत् | ७ | ८२ | मां हि पार्थ व्यपाश्रित्य | ३२ | १०८ |
| मदनुग्रहाय परमम् | १ | ११९ | मुक्तसङ्गोऽनहंवादी | २६ | १९१ |
| मनःप्रसादःसौम्यत्वम् | १६ | १७८ | मूढग्राहेणात्मनो यत् | १९ | १७८ |
| मनुष्याणां सहस्रेषु | ३ | ८१ | मृत्युः सर्वहरश्चाहम् | ३४ | ११७ |
| मन्मना भव मद्भक्तः | ६५ | २०१ | मोघाशा मोघकर्माणः | १२ | १०२ |
| मन्मनाभवमद्भक्तः | ३४ | १०८ | य इदं परमं गुह्यम् | ६८ | २०१ |
| मन्यसे यदि तच्छक्यम् | ४ | १२० | य एनं वेत्ति हन्तारम् | १९ | १६ |
| मम योनिर्महद्ब्रह्म | ३ | १५२ | य एवं वेत्ति पुरुषम् | २३ | १४८ |
| ममैवांशो जीवलोके | ७ | १६२ | यच्चापि सर्वभूतानाम् | ३९ | ११८ |
| मयाऽध्यक्षेण प्रकृतिः | १० | १०१ | यच्चावहासार्थमसत्कृतोऽसि | ४२ | १३० |
| मया ततमिदं सर्वम् | ४ | १०० | यजन्ते सात्त्विका देवान् | ४ | १७४ |
| मया प्रसन्नेन तवार्जुनेदम् | ४७ | १३२ | यज्ञदानतपःकर्म | ५ | १८४ |

| | श्लो० | पृ० |
|---|---|---|
| यज्ज्ञात्वा न पुनर्मोहम् | ३५ | ५६ |
| यज्ञशिष्टामृतभुजः | ३१ | ५५ |
| यज्ञशिष्टाशिनः सन्तः | १३ | ३५ |
| यज्ञार्थात्कर्मणोऽन्यत्र | ९ | ३४ |
| यज्ञे तपसि दाने च | २७ | १८१ |
| यततो ह्यपि कौन्तेय | ६० | २८ |
| यतन्तो योगिनश्चैनम् | ११ | १६३ |
| यत्तदग्रे विषमिव | ३७ | १९३ |
| यतः प्रवृत्तिर्भूतानाम् | ४६ | १९६ |
| यत्तु कामेप्सुना कर्म | २४ | १९० |
| यत्तु कृत्स्नवदेकस्मिन् | २२ | १९० |
| यत्तु प्रत्युपकारार्थम् | २१ | १७९ |
| यतेन्द्रियमनोबुद्धिः | २८ | ६७ |
| यतो यतो निश्चरति | २६ | ७४ |
| यत्करोषि यदश्नासि | २७ | १०६ |
| यत्र काले त्वनावृत्तिम् | २३ | ९६ |
| यत्र योगेश्वरः कृष्णः | ७८ | २०४ |
| यत्रोपरमते चित्तम् | २० | ७२ |
| यत्साङ्ख्यैः प्राप्यते स्थानम् | ५ | ६० |
| यथाऽऽकाशस्थितो नित्यम् | ६ | १०० |
| यथा दीपो निवातस्थो | १९ | ७२ |
| यथा नदीनां बहवोऽम्बुवेगाः | २८ | १२६ |
| यथा प्रकाशयत्येकः | ३३ | १५० |
| यथा प्रदीप्तं ज्वलनं पतङ्गाः | २९ | १२७ |
| यथा सर्वगतं सौक्ष्म्यात् | ३२ | १५० |
| यथैधांसि समिद्धोऽग्निः | ३७ | ५६ |
| यदक्षरं वेदविदो वदन्ति | ११ | २९ |

| | श्लो० | पृ० |
|---|---|---|
| यदा ते मोहकलिलम् | ५२ | २५ |
| यदादित्यगतं तेजः | १२ | १६३ |
| यदा विनियतं चित्तम् | १८ | ७२ |
| यदि मामप्रतीकारम् | ४५ | १० |
| यद्यप्येते न पश्यन्ति | ३७ | ९ |
| यद्यद्विभूतिमत्सत्त्वम् | ४१ | ११८ |
| यदहङ्कारमाश्रित्य | ५९ | १९९ |
| यदग्रे चानुबन्धे च | ३९ | १९३ |
| यदा भूतपृथग्भावम् | ३० | १५० |
| यदा सत्त्वे प्रवृद्धे तु | १४ | १५५ |
| यदा यदा हि धर्मस्य | ७ | ४७ |
| यदा संहरते चायम् | ५८ | २७ |
| यदा हि नेन्द्रियार्थेषु | ४ | ६८ |
| यदृच्छया चोपपन्नम् | ३२ | ७९ |
| यदृच्छालाभसन्तुष्टो | २२ | ५२ |
| यदि ह्यहं न वर्तेयम् | २३ | ३९ |
| यद्यदाचरति श्रेष्ठः | २१ | ३८ |
| यया धर्ममधर्मं च | ३१ | १९२ |
| यया तु धर्मकामार्थान् | ३४ | १९३ |
| यया स्वप्नं भयं शोकम् | ३५ | १९३ |
| यस्य नाहङ्कृतो भावः | १७ | १८८ |
| यस्य सर्वे समारम्भाः | १९ | ५१ |
| यस्त्विन्द्रियाणि मनसा | ७ | ३४ |
| यस्त्वात्मरतिरेव स्यात् | १७ | ३७ |
| यस्मात्क्षरमतीतोऽहम् | १८ | १६५ |
| यस्मान्नोद्विजते लोकः | १५ | १३८ |
| यातयामं गतरसम् | १० | १७६ |

| | श्लो० | पृ० |
|---|---|---|
| या निशा सर्वभूतानाम् | ६९ | ३० |
| यान्ति देवव्रता देवान् | २५ | १०५ |
| यामिमां पुष्पितां वाचम् | ४२ | २२ |
| यावत्सञ्जायते किञ्चित् | २६ | १४९ |
| यावदेतान्निरीक्षेऽहम् | २२ | ६ |
| यावानर्थं उदपाने | ४६ | २३ |
| युञ्जन्नेवं सदात्मानम् | २८ | ७५ |
| युक्तः कर्मफलं त्यक्त्वा | १२ | ६२ |
| युक्ताहारविहारस्य | १७ | ७२ |
| युञ्जन्नेवं सदात्मानम् | १५ | ७१ |
| युधामन्युश्च विक्रान्त | ६ | ३ |
| ये चैव सात्त्विका भावा | १२ | ८४ |
| ये तु धर्मामृतमिदम् | २० | १३९ |
| ये तु सर्वाणि कर्माणि | ६ | १३६ |
| ये त्वक्षरमनिर्देश्यम् | ३ | १३५ |
| ये त्वेतदभ्यसूयन्तः | ३२ | ४१ |
| ये यथा मां प्रपद्यन्ते | ११ | ४८ |
| ये मे मतमिदं नित्यम् | ३१ | ४१ |
| ये शास्त्रविधिमुत्सृज्य | १ | १७३ |
| येषां त्वन्तगतं पापम् | २८ | ८८ |
| ये हि संस्पर्शजा भोगाः | २२ | ६५ |
| येऽप्यन्यदेवताभक्ताः | २३ | १०५ |
| योगयुक्तो विशुद्धात्मा | ७ | ६० |
| योगसंन्यस्तकर्माणम् | ४१ | ५७ |
| योगस्थः कुरु कर्माणि | ४८ | २४ |
| योगिनामपि सर्वेषाम् | ४७ | ८० |
| योगी युञ्जीत सततम् | १० | ७० |
| यो मामजमनादिं च | ३ | १०९ |
| यो मां पश्यति सर्वत्र | ३० | ७५ |
| योऽयं योगस्त्वया प्रोक्तः | ३३ | ७६ |
| योऽन्तःसुखोऽन्तरारामः | २४ | ६५ |
| यो न हृष्यति न द्वेष्टि | १७ | १३९ |
| यो मामेवमसम्मूढः | १९ | १६५ |
| यो यो यां यां तनुं भक्तः | २१ | ८६ |
| योत्स्यमानानवेक्षेऽहम् | २३ | ६ |
| यं यं वाऽपि स्मरन् भावम् | ६ | ९१ |
| यं लब्ध्वा चापरं लाभम् | २२ | ७३ |
| यं संन्यासमिति प्राहुः | २ | ६८ |
| यं हि न व्यथयन्त्येते | १५ | १५ |
| यः शास्त्रविधिमुत्सृज्य | २३ | १७२ |
| यः सर्वत्रानभिस्नेहः | ५७ | २७ |
| रजसि प्रलयं गत्वा | १५ | १५५ |
| रजस्तमश्चाभिभूय | १० | १५४ |
| रजो रागात्मकं विद्धि | ७ | १५३ |
| रसोऽहमप्सु कौन्तेय | ८ | ८३ |
| रागद्वेषवियुक्तैस्तु | ६४ | २९ |
| रागी कर्मफलप्रेप्सुः | २७ | १९१ |
| राजन् संस्मृत्य संस्मृत्य | ७६ | २०३ |
| राजविद्या राजगुह्यम् | २ | ९९ |
| रुद्रादित्या वसवो ये च साध्याः | २२ | १२५ |
| रुद्राणां शङ्करश्चास्मि | २३ | ११५ |
| रूपं महत्ते बहुवक्त्रनेत्रम् | २३ | १२५ |
| लभन्ते ब्रह्मनिर्वाणम् | २५ | ६६ |

| | श्लो० | पृ० |
|---|---|---|
| लेलिह्यसे ग्रसमानः समन्तात् | ३० | १२७ |
| लोकेऽस्मिन् द्विविधा निष्ठा | ३ | ३२ |
| लोभः प्रवृत्तिरारम्भः | १२ | १५५ |
| वक्त्राणि ते त्वरमाणा विशन्ति | २७ | १२६ |
| वक्तुमर्हस्यशेषेण | १६ | ११३ |
| वायुर्यमोऽग्निर्वरुणः शशाङ्कः | ३९ | १३० |
| वासांसि जीर्णानि यथा विहाय | २२ | १७ |
| विधिहीनमसृष्टान्नम् | १३ | १७७ |
| विषया विनिवर्तन्ते | ५९ | २७ |
| विषयेन्द्रियसंयोगात् | ३८ | १९३ |
| विविक्तसेवी लघ्वाशी | ५२ | १९७ |
| विद्याविनयसम्पन्ने | १८ | ६४ |
| विस्तरेणात्मनो योगम् | १८ | ११३ |
| विहाय कामान्यः सर्वान् | ७१ | ३१ |
| वीतरागभयक्रोधाः | १० | ४७ |
| वृष्णीनां वासुदेवोऽस्मि | ३७ | ११८ |
| वेदाविनाशिनं नित्यम् | २१ | १७ |
| वेदानां सामवेदोऽस्मि | २२ | ११४ |
| वेदाहं समतीतानि | २६ | ८८ |
| वेदेषु यज्ञेषु तपःसु चैव | २८ | ९८ |
| वेपथुश्च शरीरे मे | २९ | ७ |
| व्यवसायात्मिका बुद्धिः | ४१ | २२ |
| व्यामिश्रेणेव वाक्येन | २ | ३२ |
| व्यासप्रसादाच्छ्रुतवान् | ७५ | २०३ |
| शक्नोतीहैव यः सोढुम् | २३ | ६५ |
| शनैः शनैरुपरमेद् | २५ | ७४ |
| शमो दमस्तपः शौचम् | ४२ | १९५ |

| | श्लो० | पृ० |
|---|---|---|
| शरीरवाङ्मनोभिर्यत् | १५ | १८७ |
| शरीरं यदवाप्नोति | ८ | १६२ |
| शुक्लकृष्णे गती ह्येते | २६ | ९८ |
| शुचौ देशे प्रतिष्ठाप्य | ११ | ७० |
| शुभाशुभफलैरेवम् | २८ | १०६ |
| शौर्यं तेजो धृतिर्दाक्ष्यम् | ४३ | १९५ |
| श्रद्धया परया तप्तम् | १७ | १७८ |
| श्रद्धावाननसूयश्च | ७१ | २०२ |
| श्रद्धावांल्लभते ज्ञानम् | ३९ | ५७ |
| श्रुतिविप्रतिपन्ना ते | ५३ | २५ |
| श्रेयान्द्रव्यमयाद्यज्ञात् | ३३ | ५५ |
| श्रेयान्स्वधर्मो विगुणः | ३५ | ४२ |
| श्रेयान्स्वधर्मो विगुणः | ४७ | १९६ |
| श्रेयो हि ज्ञानमभ्यासात् | १२ | १३७ |
| श्रोत्रादीनीन्द्रियाण्यन्ये | २६ | ५३ |
| श्रोत्रं चक्षुः स्पर्शनं च | ९ | १६२ |
| स एवायं मया तेऽद्य | ३ | ४६ |
| सक्ताः कर्मण्यविद्वांसः | २५ | ३९ |
| सङ्करो नरकायैव | ४१ | ९ |
| सङ्कल्पप्रभवान्कामान् | २४ | ७४ |
| सखेति मत्वा प्रसभं यदुक्तम् | ४१ | १३० |
| स घोषो धार्तराष्ट्राणाम् | १९ | ५ |
| सततं कीर्तयन्तो माम् | १४ | १०२ |
| स तया श्रद्धया युक्तः | २२ | ८६ |
| सत्कारमानपूजार्थम् | १७ | १७८ |
| सत्त्वात्सञ्जायते ज्ञानम् | १७ | १५६ |
| सत्त्वानुरूपा सर्वस्य | ३ | १७४ |

| | श्लो० | पृ० | | श्लो० | पृ० |
|---|---|---|---|---|---|
| सत्त्वं रजस्तम इति | ५ | १५३ | सर्वमेतदृतं मन्ये | १४ | ११२ |
| सत्त्वं सुखे सञ्जयति | ९ | १५४ | सर्व योनिषु कौन्तेय | ४ | १५२ |
| सदृशं चेष्टते स्वस्याः | ३३ | ४१ | सर्वस्य चाहं हृदि सन्निविष्टः | १५ | १६४ |
| सद्भावे साधुभावे च | २६ | १८० | सर्वाणीन्द्रियकर्माणि | २७ | ५३ |
| संनियम्येन्द्रियग्रामम् | ४ | १३५ | सर्वेन्द्रियगुणाभासम् | १४ | १४५ |
| सन्तुष्टः सततं योगी | १४ | १३८ | सहजं कर्म कौन्तेय | ४८ | १९६ |
| सन्यासं कर्मणां कृष्ण | १ | ५८ | सहयज्ञाः प्रजाः सृष्ट्वा | १० | ३५ |
| संन्यासस्य महाबाहो | १ | १८२ | सहस्रयुगपर्यन्तम् | १७ | ९४ |
| संन्यासस्तु महाबाहो | ६ | ६० | साङ्ख्ययोगौ पृथग्बालाः | ४ | ५९ |
| संन्यासः कर्मयोगश्च | २ | ५९ | साधिभूताधिदैवं माम् | ३० | ८९ |
| समदुःखसुखः स्वस्थः | २४ | १५८ | सिद्धिं प्राप्तो यथा ब्रह्म | ५० | १९७ |
| समोऽहं सर्वभूतेषु | २९ | १०७ | सुखदुःखे समे कृत्वा | ३८ | २१ |
| समं कायशिरोग्रीवम् | १३ | ७१ | सुखमात्यन्तिकं यत्तद् | २७ | ७३ |
| समं पश्यन्हि सर्वत्र | २८ | १४९ | सुखं त्विदानीं त्रिविधम् | ३६ | १९३ |
| समं सर्वेषु भूतेषु | २७ | १४९ | सुदुर्दर्शमिदं रूपम् | ५२ | १३३ |
| समः शत्रौ च मित्रे च | १८ | १३९ | सुहृन्मित्रार्युदासीनम् | ९ | ७० |
| सर्वकर्माणि मनसा | १३ | ६२ | स्थाने हृषीकेश तव प्रकीर्त्या | ३६ | १२९ |
| सर्वकर्माण्यपि सदा | ५६ | १९८ | स्थितप्रज्ञस्य का भाषा | ५४ | २६ |
| सर्व गुह्यतमं भूयः | ६४ | २०० | स्पर्शान्कृत्वा बहिर्बाह्यान् | २७ | ६६ |
| सर्वतः पणिपादं तत् | १३ | १४४ | स्वधर्ममपि चावेक्ष्य | ३१ | १९ |
| सर्वद्वाराणि संयम्य | १२ | ९३ | स्वभावजेन कौन्तेय | ६० | १९९ |
| सर्वद्वारेषु देहेऽस्मिन् | ११ | १५४ | स्वयमेवात्मनाऽऽत्मानम् | १५ | ११३ |
| सर्वधर्मान्परित्यज्य | ६६ | २०१ | सर्गाणामादिरन्तश्च | ३२ | ११६ |
| सर्वभूतस्थमात्मानम् | २९ | ७५ | स्वे स्वे कर्मण्यभिरतः | ४५ | १९५ |
| सर्वभूतस्थितं यो माम् | ३१ | ७५ | हतो वा प्राप्स्यसि स्वर्गम् | ३७ | ५ |
| सर्वभूतानि कौन्तेय | ७ | १०१ | हन्त ते कथयिष्यामि | १९ | ११४ |
| सर्वभूतेषु येनैकम् | २० | १८९ | हृषीकेशं तदा वाक्यम् | २१ | ५ |

मृगमीन सज्जनानां तृण जल संतोषविहितवृत्तिनां।
लुब्धकधीवरपिसुना
निष्कारणा वैरीणो जगति

अथ प्रपंचना ग्रंथ है तीन = उतम अधी
कारी करनी ये = उपनीसद भास्य = उतम = पत्ना १
दूसरा = गीताभास्य = तीसरा = ब्रमसूत्र = भास्य
मध्यम अधी कारी करनी ये = पत्ना उपदेससहस्री =
दूसरा = बीबेकचूडामणी = तीसरा न. ३ सस्त्र
सी = ३ = कनीष्ट अधी कारी करनी ये = पत्न
तत्व बोध = आतम बोध इत्यादीक =